॥ श्री गुरुभ्यो नमः ॥ ॥ श्री महा गणाधिपतये नमः ॥

# ॥ अथा त्वरित रुद्र विधानम् ॥

अस्य श्री त्वरित रुद्रमन्त्रस्य अथर्वण ऋषिः । अनुष्टुप् छंदः ।
श्री त्वरित रुद्रो देवता ॥ ओं बीजं (नमः बीजं) ।
ह्रीं शक्तिः (अस्त्विति शक्तिः) ।
क्लीं कीलकं (ओं यो रुद्रो अग्नौ कीलकम्) ॥
मम ऐहिकामुष्मिक फलावाप्तर्थे जपे विनियोगः ॥

॥ **षडंगन्यासः** ॥ ओं यो रुद्रो अग्नौ । यो अप्सु । य ओषधीशु ।
यो रुद्रो विश्वा । भुवना विवेश । तस्मै रुद्राय नमो अस्तु ॥
॥ ओं श्लीं पशु हुं फट् इति दिग्भंदः ॥

**॥ अथा पादादि षोडश स्थान न्यासः ॥**

ओं यः – पादयोः । रुद्रः – जंघयोः । अग्नौ – जानुनि ।
यः – उरौ । अप्सु – गुह्ये । यः – मेढ्रे । ओषधीषु – नाभ्यां ।
यः – उदरे । रुद्रः – हृदये । विश्वा – स्कन्दे । भुवना – मुखे ।
आविवेश – नासिकयोः । तस्मै – नेत्रे । रुद्राय – भ्रूमध्ये ।
नमः – ललाटे ॥

॥ ध्यानम् ॥

रुद्रं चतुर्भुजं देवं त्रिनेत्रं वरदाभयं ।
दधानमूर्ध्वहस्ताभ्यां शूलं डमरुमेव च ॥
अंकसंस्थामुमां पद्मे दधान च करद्वये ।
अथः करद्वये कुंभ मातुलिंगं च बिभ्रतीम् ॥
वंदे हरं त्वरितरुद्रमनन्तरूपं
वामोरुचाद्रिसुतयान्वित पंचवक्त्रं ।
साभीति शूलवरदाभयहस्तमीशं
ध्यायेत्प्रदोष समये गिरिजा समेतम् ॥

ध्यायेत्प्रदोषसमये पार्वती सहितं शिवं ।
एषस्त्वरितया रुद्रत्परितेष्टसुखप्रदः ॥
सुधाकुंभादिदोर्भिश्च योगमुद्रांकरद्वये ।
त्वमीश्वरं प्रभामुग्रं शूलसर्पं भयंकरम् ॥
चतुर्भुजं त्रिनेत्रं च शुद्धस्फटिकसन्निभं ।
पंचवक्त्रंभजाम्यग्रे शंकरं त्वरितेष्टदम् ॥
चतुर्भुजं त्रिनेत्रं च शुद्धस्फटिकसन्निभं
अमृतेन संपूर्णे द्वौ कलशौ हस्तयोर्द्वयो ।
हस्तद्वयेन योगस्य मृगमुद्रास्थिरासनं
ध्यायेदीशं महादेवं शन्करं करुणाकरम् ॥
उग्रकर्मणि चैवोग्रं मूर्तिं ध्यायेत् उमापतिं ।
द्विभुजौ नागपाशौ च शूलपाणिं जटाधरं ।
ध्यात्वैवं शन्करं पापान्मुच्यते मानुषोद्भवात् ॥
॥ लिंग मुद्रां प्रदर्श्य ॥

**॥ मन्त्रः ॥**

ओं यो रुद्रो अग्नौयो अप्सु य ओषधीषु
यो रुद्रोविश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु ॥

## ॥ त्वरितरुद्रानुवाकः ॥

१॥ ओं यो रुद्रो अग्नौयो अप्सु य ओषधीषु
यो रुद्रोविश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु ॥
२॥ ओं नमो रुद्रेभ्योये पृथिव्यां येऽन्तरिक्षेयेदिवियेषामन्नं वातोवर्षमिषवस्तेभ्यो
दशप्राचीर्दशदक्षिणा दशप्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्तेनो मृडयन्तु
तेयं द्विष्मोयश्चनोद्वेष्टि तं वो जंभे दधामि ॥
३॥ ओं सर्वोवैरुद्रस्तस्मैरुद्रायनमोअस्तु ।
कद्रुद्रायप्रचेतसे मीढुष्टमायतव्यसे ।
वोचेमशंतम गं हृदे ॥
४॥ ओं त्र्यंबकंयजामहे सुगंधिं पुष्टिवर्धनं ।
उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥
५॥ ओं इमां ग्ं रुद्राय तवसे कपर्दिने
क्षयद्वीरायप्रभरामहे मतिं ।
यथा नः शमसद्विपदे चतुष्पदे
विश्वं पुष्टंग्रामे अस्मिन्ननातुरम् ॥
६॥ ओं त्वदत्तेभि रुद्रशंतमेभिः शतंहिमा अशीय भेषजेहि ।
व्या १_अ'स्मद्वेषोवितरं व्यंहोव्यमीवाश्चापयस्वाविषोची ॥
७॥ ओं अर्हन् बिभर्षिसायकानिधान्वार्हन्विश्वं यजतं विश्वरूपं ।
अर्हन्निदं दयसेमिश्वमभ्वंनवा ओ जीयो रुद्रत्वदस्ति ॥
८॥ ओं स्तुहिश्रुतं गर्तसदं युवानं मृगं नभीम मुपहत्नुमुग्रं ।
मृडा जरित्रेरुद्रस्तवानो अन्यन्ते अस्मन्निवपन्तुसेनाः ॥
९॥ ओं त्वमग्नेरुद्रो असुरोमहोदिवस्त्व ग्ं
शर्धो मारुतं पृक्ष ई शिषे ।
त्वं वातैररुगणैर्यासिशंगयुस्त्वं
पूषाविधतः पासिनुत्मना ॥

१०॥ ओं आवोराजानमध्वरस्य रुद्रं
होतारं सत्ययजं रोदस्योः ।
अग्निं पुरातनयित्नो रचित्तद्धिरण्यरोपमवसे कृणुध्वम् ॥
११॥ ओं अणोरणीयान्महतो महीयानात्मा
गुहायां निहितोऽस्य जन्तोः ॥
तमक्रतंपश्यतिवीत शोकोधातुर्द्युतानात्सवितुश्च विष्णोः ॥
१२॥ ओं सजोषा इंद्रसगणोमरुद्भिः सोमं पिबवृत्रहाशूर विद्वान् ।
जहि शत्रूग् रपमृधोनुदस्वाथाभयं कृणुहि विश्वतोनः ॥
१३॥ ओं गंधद्वारां दुरादर्षां नित्यपुष्टां करीषिणीं ।
ईश्वरीं सर्वभूतानांत्वामिहोपह्वये श्रियम् ॥
१४॥ ओं नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय
हिरण्यपतयेऽंबिकापतय उमापतये पशुपतये नमो नमः ॥
१५॥ ओं सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवेभवेनाति भवे भवस्वमां भवोद्भवाय नमः ॥
१६॥ ओं वामदेवायनमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः
कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः
सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥
१७॥ ओं अघोरेभ्योऽथघोरेभ्यो घोरघरतरेभ्यः ।
सर्वेभ्यः सर्वशर्वेभ्योऽनमस्तेअस्तुरुद्ररूपेभ्यः ॥
१८॥ ओं तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्र प्रचोदयात् ॥
१९॥ ओं ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां
ब्रह्मादिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवो मे अस्तु सदाशिवोम् ॥
२०॥ ओं ऋत ं सत्यं परंब्रह्मपुरुषं कृष्णपिंगलं ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥

२१॥ ओं यस्मात्परं नापरमस्तिकिंचिद्यस्मान्नाणीयोनज्यायोऽस्तिकश्चित् ।
वृक्ष इवस्तब्दोदिवतिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥
२२॥ ओं तमुष्टुहियः स्विषु सुधन्वायोविश्वस्यक्षयति भेषजस्य ।
यक्ष्वामहे सौ मनसाय रुद्रं नमोभिर्देव मसुरं दुवस्य ॥
२३॥ ओं येते सहस्रमयुतं पाशा मृत्योमर्त्याय हन्तवे ।
तान्यज्ञस्य मायया सर्वानव यजामहे ॥
मृत्यवे स्वाहा मृत्यवे स्वाह ॥
२४॥ ओं आतेपितुर्मरुतां सुम्नमेतुमानः
सूर्यस्य संदृशो युयोथाः ।
अभि नो वीरोअर्वति क्षमेत प्रजायेमहि रुद्र प्रजाभिः ॥
२५॥ ओं मीडुष्टम शिवतम शिवोनः सुमनाभव ।
परमेवृक्ष आयुधं निधायकृत्तिंवसान आचरपिनाकंबिभ्रदागहि ॥

सुरासुरजगद्वंद्य शंकरार्य जगत्प्रभो ।
आयुरारोग्यमैश्वर्यं मोक्षं देहि दयानिधे ॥
तमीश्वर प्रभात्युग्र शूलसर्पभयंकर ॥

## ॥ फल ॥

यस्य कुक्षौस्थितं सर्वं स्थावरण जंगमं च यत् ।
दुःखबिधे नमस्तस्मै ब्रह्मविष्णुशिवात्मने ॥
उग्रकर्मणिचैवोग्रं मूर्तिं ध्यायेदुमापतिं ।
द्विभुजं नागपाशौ च शूलपाणिं जटाधरम् ॥
ध्यात्यैव शंकरं पापान्मुच्यते पूजयेच्छिवं ।
जुहुयात्तद्दशांशेन तद्दशांशं च तर्पणं ।
एवं कृते तु सिद्धिस्यात् परार्थं तु ततो जपेत् ॥
पुरश्चरणमेवं तु कृत्वा संपूज्य शंकरं ।
जपेत् त्वरितरुद्रं तु सर्वकामफलप्रदम् ॥
श्रीकामोश्शान्तिकामो वा जपेन्मन्त्र मतंद्रितः ।
अधश्शय्यै कभुक्तातु ब्रह्मचारीहविष्यभुक् ।
अयुते द्वे जपन् पूर्वं प्रत्यहं तु ततो जपेत् ॥
बिल्वै स्समिद्धिश्श्रीकामः शांतिकामः शमीभवैः ।
जुहुयादाज्यसम्मिश्रं होमं जपमथार्चनम् ॥
एवं सर्वेषु रुद्रेषु जुहुया ज्जातवेदसी ।
जप्त्वालक्षंतु पुत्रार्थं पायसं जुहुयात्ततः ।
वित्तार्थी श्री फलैर्होमश्चायुर्वर्धस मिष्यते ॥

॥ **पूजायन्त्रम् & क्रम** ॥

षट्कोणं वृत्तयुग्मंतु वृत्तं वसुदळं तथा ।
वृत्तं षोडशपत्रंतु पुनर्वृत्तं च भूपुरम् ॥
षट्कोण – वृत्तत्रय – अष्टदळ – षोडशदळ – वृत्तं – भूपुरं ॥
मन्डूकादि पीठं संपूज्य । वामादि नवशक्ति ॥

॥ आवरण ॥

षट्कोण मध्ये मूलेन षट्कोणे अंगैः प्रथामावरणम् ॥
ततः अष्टदळे पूर्वादि क्रमेण असितांग भैरवाय नमः ।
रुरुभैरवाय नमः । चंडभैरवाय नमः । क्रोधभैरवाय नमः ।
उन्मत्तभैरवाय नमः । कपालभैरवाय नमः । भीषणभैरवाय नमः ।
संहारभैरवाय नमः ॥२॥
षोडशदळे पूर्वादिक्रमेण । सूक्ष्माय । शिवाय । एकनेत्राय । त्रिमूर्तये ।
श्रीकंठाय । शिखंडिने । उमापतये । चन्डेश्वराय । नंदीश्वराय । महाकाळाय ।
गणेश्वराय । वृषभवाहनाय । भृंगीश्वराय । क्रोधाय । उन्मत्ताय ॥३॥
षोडशदळान्तराळे ईशान्यादि प्रादक्षिन्येन । वामदेवाय । ज्येष्ठाय । श्रेष्ठाय ।
रुद्राय । कालाय । कलविकरणाय । बलविकरणाय । बलाय । बलप्रमथनाय ।
सर्वभूतदमनाय । मनोन्मनाय । अघोरेभ्योऽथघोरेभ्यो । घोरघोरतरेभ्यः ।
सर्वेभ्यो । शर्वसर्वेभ्यो । नमस्ते अस्तु रुद्ररूपेभ्यः ॥४॥ वृत्ते अष्टदिक्षु । आं
ब्राहम्यै । ईं माहेश्वर्यै । ऊं कौमार्यै । ॠं वैष्णव्यै । लॄं वाराह्यै । ऐं माहेन्द्रै ।
औं चामुन्डायै । अः चन्डिकायै । ओं ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां
ब्रह्मादिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवो मे अस्तु सदाशिवोम् ॥ ॥५॥
भूपुरे इंद्रादि ॥५॥ तदायुधानि ॥६॥ चन्डेश्वराय ॥
लिंगमुद्रां प्रदर्श्य ॥

॥ होमद्रव्याणि तत्फानि ॥

घृताक्षतैः – मुक्तिकाम ।

दूर्वाभिः – आयुष्कामः । लाजैः – कान्याकाम ।

अपामार्गैः – अर्थकाम । मधुपुष्पैः – वश्यकाम ।

श्रीफलैः – श्रीकाम । सिद्धार्थैः – सिद्धिकाम । खादिरैः – तेजस्काम ।

औदुंबरै – पुत्रकाम । साज्यसिद्धार्थैः – पुष्टिकाम ।

गडूची खंडैः – ज्वरनिवृत्ति ।

उत्पलैः दधिमधुघृतरष्टसहस्रं जुहुयात् – यथेष्टा श्रीर्भवति ।

बिल्वपत्रैर्दधिमधुघृताक्तैः – सहस्रहोमाज्वरं नाशयेत् ।

शाल्लली समिद्भिः रुधिराक्तैः सहस्रं जुहुयात् – शत्रूणां सद्यो मरणं भवति

॥ इत्याह भगवान् बोधायनः ॥

# ॥ शिवस्तुतिः ॥

देव्युवाच

श्रुतं सर्वं मया देव मोक्षमार्गैकसाधनम् ।
स्तोतुमिच्छामि देव त्वामनुजानीहि मां प्रभो ॥ १ ॥

शिवस्तुतिः

नमस्ते देवेदेवेश नमस्ते भक्तवत्सल ।
नमस्ते करुणासिन्धो परमेशाय ते नमः ॥ २ ॥
ईशानाय नमस्तुभ्यं नमस्तत्पुरुषाय च ।
अघोराय नमो देव वामदेवाय ते नमः ।
सद्योजाताय देवाय पञ्चब्रह्मात्मने नमः ॥ ३ ॥
षट् त्रिंशत्तत्त्वरूपाय तत्त्वातीताय शम्भवे ।
परतत्त्वस्वरूपाय तत्त्ववेद्याय ते नमः ॥ ४ ॥

कालान्तक महादेव कालार्चितपदाम्बुज ।
कालकल्पितमार्गाय कालरूपाय ते नमः ॥ ५ ॥
किरातरूपमास्थाय विधेरन्यायवर्तिनः ।
शिरोहराय दुष्टानां शासकाय च ते नमः ॥ ६ ॥
दक्षाध्वरविनाशाय दक्षशीर्षापहारिणे ।
भूयो रक्षितदक्षाय स्वयं दक्षाय ते नमः ॥ ७ ॥
त्यक्तेश्वराणां विप्राणां दर्शयित्वा स्वकं महः ।
तद्रक्षणं कृतं येन तस्मै ते प्रभवे नमः ॥ ८ ॥
समुद्रमथनोद्भूतहालाहलमहाभयात् ।
त्रिजगद्रक्षितं येन विषकण्ठाय ते नमः ॥ ९ ॥
कृतापराधं कन्दर्पं दग्ध्वा फालेक्षणाग्निना ।
सोऽप्यनङ्गः कृतो येन तस्मै कामजिते नमः ॥ १० ॥
मेरुकार्मुकशेषज्याविष्णुसायकभूरथः ।
अजयत् त्रिपुरं यस्तु तस्मै ते जिष्णवे नमः ॥ ११ ॥
व्याघ्रासुरमहादर्पदलनं वै विधाय च ।
दध्रे तच्चर्म यस्तस्मै व्याघ्रामित्राय ते नमः ॥ १२ ॥
त्रिलोकभीकरं घोरमन्धकाख्यमहासुरम् ।
यो जघान नमस्तस्मै अन्धकासुरवैरिणे ॥ १३ ॥
जलन्धरमहादैत्यं पादाङ्गुष्ठकृतेन च ।
चक्रेण योऽहरत् तस्मै जलन्धिरजिते नमः ॥ १४ ॥
नरसिंहजिते तस्मै ब्रह्मशीर्षकपालिने ।
तन्मालालङ्कृताङ्गाय हरिब्रह्महृते नमः ॥ १५ ॥
जित्वा त्रिविक्रमं भूयस्तत्कङ्कालधराय च ।
शिरोवेष्टितमत्स्याय स्वतन्त्राय च वै नमः ॥ १६ ॥

महावराहदंष्ट्राभिर्भूषिताय महात्मने ।
सोमसूर्याग्निनेत्राय महादेवाय ते नमः ॥ १७ ॥
बाणासुरस्तव प्रीत्या दत्तबाहुसहस्रिणे ।
निवार्य तत्तमस्तस्मै वरदाय च ते नमः ॥ १८ ॥
पुरा चतुर्मुखं सृष्ट्वा तस्मै विश्वसृजे मुदा ।
ददौ यश्चतुरो वेदान् तस्मै वेदात्मने नमः ॥ १९ ॥
विष्णवे लोकरक्षार्थं शङ्खं चक्रं च यो ददौ ।
सर्गादौ कृपया तस्मै नमो विष्णुपराय ते ॥ २० ॥
कल्पान्ते संहृतं कृत्वा जगत् स्थावरजङ्गमम् ।
एको ननर्त यस्तस्मै महानाट्याय ते नमः ॥ २१ ॥
ब्रह्मणा हंसरूपेण विष्णुना क्रोडरूपिणा ।
अनिर्देश्यमहालिङ्गमूर्तये ज्योतिषे नमः ॥ २२ ॥
सर्वभूताधिपतये सर्वविद्याधिपाय च ।
सदाशिवाय ते देव ब्रह्माधिपतये नमः ॥ २३ ॥
विश्वतः पाणिपादाय विश्वतोऽक्षिमुखाय च ।
विश्वतो व्याप्तरूपाय नमो विश्वात्मकाय ते ॥ २४ ॥
अव्यक्ताय पुराणाय बहुरूपैकरूपिणे ।
संस्थिताय तमःपारे तेजोरूपाय ते नमः ॥ २५ ॥
वेदाः समस्ता अपि मुख्यवृत्त्या
भवन्तमेव प्रतिपादयन्ति ।
कर्तारमेकं जगतां तथापि
मायावृतास्त्वां नहि जानते हि ॥ २६ ॥

इन्द्रोऽनलो दण्डधरोऽथ नैरृतिः
पाशी च वायुर्धनदश्च शूली ।
कुर्वन्ति नित्यं निजकृत्यजातं
यत्प्रेरितास्तं शरणं व्रजामि ॥ २७ ॥
विष्णुर्जगत्पाति सृजत्यजश्च
रुद्रो हरत्येव लयावसाने ।
यदाज्ञया ते निजकार्यदक्षा–
स्तं शङ्करं त्वां शरणं व्रजामि ॥ २८ ॥
ददाति लक्ष्मीः श्रियमम्बिकाऽपि
ज्ञानं च दिव्यं परमात्मनिष्ठम् ।
वाणी च वाचं जनसंहतीनां
यदाज्ञया तं शरणं व्रजामि ॥ २९ ॥
आपश्च भूतान्यपि जीवयन्ति
वायुश्च वाति ज्वलतीह वह्निः ।
धत्ते च धात्रीमपि पन्नगेशो
यदाज्ञया तं शरणं व्रजामि ॥ ३० ॥
इन्द्रादयः सर्वसुराश्च नित्यं
त्वच्छासनेन प्रभवन्ति भूयः ।
अन्ते च यान्ति स्वपदं पुराणं
त्वामेव तस्माच्छरणं गताऽस्मि ॥ ३१ ॥
त्वन्मायया मोहितमेव जातं
त्वत्प्रेरितं चित्तमिदं हि नित्यम् ।
करोति कृत्यं नियतं त्वदुक्तं
तस्माच्छरण्यं सततं भजे त्वाम् ॥ ३२ ॥

ब्रह्माण्डसंघास्त्वयि संस्थिता हि
यथा महाब्धौ जलबुद्बुदौघाः ।
ब्रह्माण्डकोट्याश्रितदिव्यरूपं
तस्मादहं त्वां प्रणता भवामि ॥ ३३ ॥
गृहं श्मशानं भसितं त्वदङ्गे
भृत्याश्च ते घोरपिशाचसंघाः ।
भूषा तवास्थीनि करोटिमाला
चित्रं तथापीश्वर ते शिवत्वम् ॥ ३४ ॥
वस्त्रं च ते व्याघ्रकठोरचर्म
हाराश्च सर्पा विषपूर्णवक्त्राः ।
करस्थशूलाग्निकपालपाशा
तथापि चित्रं शिवरूपमेतत् ॥ ३५ ॥
त्यक्त्वा सतां वर्त्म पितुश्च पादौ
छित्वा भवन्तं शरणं गताय ।
विप्राय नित्यत्वफलप्रदाय
तस्मै नमस्ते नतवत्सलाय ॥ ३६ ॥
येनावृते खं च मही च भानुः
यत्तेजसा निस्तपति प्रभावान् ।
विश्वाधिकं रुद्रमृषिं महान्तं
वदन्ति तस्मै पुरुषाय ते नमः ॥ ३७ ॥
वेदाश्च यं स्तोतुमशक्नुवन्त-
स्त एव भूयो मनसा निवृत्ताः ।
अप्राप्य चानन्दनिधिं महेशं
तं नौम्यवाङ्मानसगोचरं त्वाम् ॥ ३८ ॥

उत्पद्यते विलीयन्ते यथाऽब्धौ वीचयस्तथा ।
त्वयि सर्वमिदं दृश्यं जगदेतच्चराचरम् ॥ ३९ ॥
स्वतन्त्रशक्तिमान् देव त्वमेव पुरुषोत्तमः ।
त्वदधीनमिदं विश्वं विश्वनाथाय ते नमः ॥ ४० ॥
समस्तसाधनोपाय सर्वसिद्धिप्रदायक ।
सर्वाधार विरूपाक्ष भक्तवत्सल ते नमः ॥ ४१ ॥
शैवसिद्धान्तमार्गस्थभक्तकायस्थ शङ्कर ।
नमस्ते दीनसुजनपरित्राणपरायण ॥ ४२ ॥
नमश्चापत्प्रतीकारकरणाय महात्मने ।
सर्वान्तरात्मने तुभ्यं नमस्ते परमात्मने ॥ ४३ ॥
अखिलाम्नायसंस्तुत्य भक्तिग्राह्य स्त्वप्रिय ।
सर्वव्यापक देवेश नमस्ते भद्रदायक ॥ ४४ ॥
उपमातीत सर्वेश समस्तामरपूजित ।
समस्तशक्तिसङ्काश परब्रह्मन् नमोऽस्तु ते ॥ ४५ ॥
अनन्तकोटिमार्ताण्डचण्डतेजःस्वरूपिणे ।
सच्चिदानन्दरूपाय निर्गुणाय नमोऽस्तु ते ॥ ४६ ॥
ज्ञानज्ञातृज्ञेयरूप कर्तृकृत्यक्रियात्मक ।
भूतभव्यभवन्नाथ नमस्ते त्रिगुणात्मने ॥ ४७ ॥
नित्य निर्मल निर्द्वन्द्व निरामय निरञ्जन ।
देवाचार्य नमस्तुभ्यं भूयो भूयो नमो नमः ॥ ४८ ॥
महिमानं महादेव ज्ञातुं स्तोतुं तव प्रभो ।
श्रुतयोऽप्यसमर्था हि मादृशानां कुतो मतिः ॥ ४९ ॥
सर्वापराधान् मे स्वामिन् क्षमस्व जगतां प्रभो ।
यतोऽहं देवदेवेश त्वदाज्ञावशवर्तिनी ॥ ५० ॥

मया चापल्यभावेन यद्यदुक्तं तवाग्रतः ।
तत्सर्वं क्षम्यतां देव कृपादृष्ट्याऽवलोक्य माम् ॥ ५१ ॥
शिव उवाच
स्तोत्रेणानेन तुष्टोऽस्मि तव भक्त्या च पार्वति ।
वरं वरय दास्यामि यत्ते मनसि रोचते ॥ ५२ ॥
देव्युवाच
वरमन्यं न याचेऽहं तव भक्तिं विना प्रभो ।
तामेव सुदृढां देहि सैव मे परमा गतिः ॥ ५३ ॥
शिव उवाच
तथैव सततं भूयात् किमलभ्यं तव प्रिये ।
पुनर्भक्तहितार्थय वरमन्यं ददामि ते ॥ ५४ ॥
स्तोत्रमहिमा
त्वया कृतमिदं स्तोत्रं भक्तिभावेन भावितः ।
यः पठेन्नित्यतो भूत्वा स याति परमां गतिम् ॥ ५५ ॥
अभ्यसेदन्वहं देवि संवादमिममावयोः ।
षट् स्थलज्ञानसंपन्नः प्राप्नुयान्मुक्तिमुत्तमाम् ॥ ५६ ॥
एवमुक्तं मया देवि मोक्षमार्गैकसाधनम् ।
वेदागमपुराणानां सारभूतं तव प्रिये ॥ ५७ ॥
गोपनीयमिदं शास्त्रं वीरमाहेश्वरप्रियम् ।
तेषामेव हि वक्तव्यं वीरमार्गानुसारिणाम् ॥ ५८ ॥
इति श्रुत्वा महाज्ञानं पावनं शिवशासनम् ।
ध्यायमाना शिवं देवि तस्थौ सन्तुष्टमानसा ॥ ६० ॥
॥ स्वस्ति श्रीसूक्ष्मागमे क्रियापादे शिवस्तोत्रनिरूपणं
नाम दशमः पटलः ॥

B.N. Shrinath Udupa TRIPURASHRI #2/217(238)
Karikallkatte Japthi post Kundapur TQ Udupi DST Email:- shrinath.udupa@gmail.com Cell:- +91-9740069904